# ग्रंथसूची ।



## नियमावली ।

१ । इस ग्रंथमालामें गूढ संस्कृत प्राकृत तथा सरलार्थ सहित दिगंबरजैनाचार्यकृत दर्शन, सिद्धांत, न्याय, अध्यात्म, व्याकरण, काव्य, साहित्य, पुराण, गणित, ज्योतिष वैद्यक प्रभृति सर्वप्रकार के प्राचीन ग्रंथ छपते हैं ।

२ । इस ग्रंथमालाका प्रत्येक खंड (अंक) दश फारमसे (८० पृष्ठ से) कम नहीं होगा और प्रत्येक खंडमें एक दो या तीन से अधिक ग्रंथ नहीं रहेंगे ।

३ । इस ग्रंथमाला का मूल्य १२ खंडों का सर्वसाधारण से ८) रु प्रथम ही ले लिया जायगा और नैयायिक, वैदांतिक और संस्कृत पुस्तकालयोंको सेवार्थ यह ग्रंथमाला विना मूल्य भी भेजी जायगी । परंतु पोस्टेज खर्च प्रत्येक अंक का ≡) या ≡-) वी पी से सबको देना होगा ।

४ । जो महाशय एक साथ १००) रु भेजेंगे वे यावज्जीव स्थायीग्राहक समझे जावेंगे । परंतु मार्ग व्यय उनको भी जुदा देना होगा ।

५ । जो महाशय पुस्तकालयों मंदिरों, विद्यार्थियों वा विद्वानोंको वितरण करनेकेलिये ग्राहक बनैं उनको १००) रु पेशगी भेजनेसे १२ खंड तक पंद्रह २ प्रति प्रत्येक खंडकी भेजी जायगी। मार्गव्यय पृथक् देना होगा ।

मूल्य वा पत्र भेजनेका पता—पन्नालाल जैन

मंत्री—श्रीजैनधर्मप्रचारिणीसभा काशी

पोष्ट—बनारस सिटी ।

---

## जैनी भाइयोंसे प्रार्थना ।

यह ग्रंथमाला प्राचीन जैनग्रंथोंके जीर्णोद्धारार्थ व जैनधर्मके प्रचारार्थ प्रकाशित की जाती है । इसमें जो कुछ द्रव्य लाभ होगा वह भी धर्मप्रचार व परोपकारमें ही लगाया जायगा । इसकारण प्रत्येक धर्मात्मा उदार महाशयोंको चाहिये कि प्रथम तो एक २ या दो दो ग्रंथोंको छपाकर जीर्णोद्धार करनेकेलिये द्रव्य प्रदान करें । दूसरे प्रत्येक मंदिरजीके शास्त्रभंडारोंमें ग्राहक बनकर इन सब ग्रंथोंका संग्रह करके रक्षा करें अथवा स्वयं ग्राहक बनकर अपने यहांके संस्कृत पढनेवाले विद्यार्थियोंको अथवा स्वकुलमें अन्यमती विद्वानोंको दान देकर सत्यार्थ पदार्थों का प्रचार करें । शास्त्रदानी महाशयोंकेलिये पांचवां नियम बताया है ।

प्रार्थी—पन्नालाल बाकलीवाल ।



श्रीपरमात्मने नम ।

# सनातनजैनग्रंथमालाया:

प्रथम खड।

स्याद्वादविद्यापतिश्रीमद्विद्यानदस्वामिविरचिता

— १

## आप्तपरीक्षा

२

## पत्रपरीक्षा च

श्रीयुत पडितगजाधरलालजैनशास्त्रिणा॰ सपादिते

ते च

उस्मानाबादनिवासिस्वर्गीयश्रेष्ठिवर्यकस्तूरचद्रस्यात्मजबालचद्रस्य स्मरणार्थं

श्रीजैनधर्मप्रचारिणीसभाया मन्त्रिणा

श्रीपन्नालालजैनेन

काशीस्थचद्रप्रभाख्ये मुद्रणयत्रालये
प्रकाशित ।

---

श्रीवीरनिर्वाणसवत्सर २४३९ । ख्रिष्टाब्द १९१३ ।

प्रथम सस्करण ] ❁ [ अस्य खडस्य मूल्यमेको रूप्यक ।

# ग्रंथसूची।



# नियमावली।

१। इस ग्रंथमालामें मूल संस्कृत प्राकृत तथा भाषाटीकासहित दिगंबरजैनाचार्यकृत दर्शन, सिद्धांत, न्याय, अध्यात्म, व्याकरण, काव्य, साहित्य, पुराण गणित, ज्योतिष वैद्यक प्रभृति सर्वप्रकारके प्राचीन ग्रंथ छपते हैं।

२। इस ग्रंथमालाका प्रत्येक खंड (अंक) दश फारमसे (८० पृष्ठ से) कम नहीं होगा और प्रत्येक खंडमें एक दो या तीन से अधिक ग्रंथ नहीं रहेंगे।

३। इस ग्रंथमाला का मूल्य १२ खंडों का सर्वसाधारण से ८) रु प्रथम ही ले लिया जायगा और नैयायिक, वैदांतिक और संस्कृत पुस्तकालयोंकी सेवामें यह ग्रंथमाला बिना मूल्य भी भेजी जायगी। परंतु पोष्टेज खर्च प्रत्येक अंक का =) या ≡) वी पी में सबको देना होगा।

४। जो महाशय एक साथ १००) रु भेजेंगे वे यावज्जीव स्थायीग्राहक समझे जावेंगे। परंतु मार्गव्यय उनको भी जुदा देना होगा।

५। जो महाशय पुस्तकालयों मंदिरों, विद्यार्थियों वा विद्वानोंको वितरण करनेकेलिये ग्राहक बनेंगे उनको १००) रु पेशगी भेजनेसे १२ खंड तक पंद्रह २ प्रति प्रत्येक खंडकी भेजी जायगी मार्गव्यय पृथक् देना होगा।

मूल्य वा पत्र भेजनेका पता—पन्नालाल जैन

मंत्री—श्रीजैनधर्मप्रचारिणीसभा काशी

पोष्ट—बनारस सिटी।

---

# जैनी भाइयोंसे प्रार्थना।

यह ग्रंथमाला प्राचीन जैनग्रंथोंके जीर्णोद्धारार्थ व जैनधर्मके प्रचारार्थ प्रकाशित की जाती है। इसमें जो कुछ द्रव्य लाभ होगा वह भी धर्मप्रचार व परोपकारमें ही लगाया जायगा। इसकारण प्रत्येक धर्मात्मा उदार महाशयोंको चाहिये कि प्रथम तो एक २ या दो दो ग्रंथोंको छपाकर जीर्णोद्धार करनेकेलिये द्रव्य प्रदान करें। दूसरे प्रत्येक मंदिरजीके शास्त्रभंडारमेंसे ग्राहक बनकर इन सब ग्रंथोंको संग्रह करके रक्षा करें अथवा स्वयं ग्राहक बनकर अपने यहांके संस्कृत पढनेवाले विद्यार्थियोंको अथवा स्वमतस्थ अन्यमती विद्वानोंको दान देकर सत्यार्थ पदार्थों का प्रचार करें। शास्त्रदानी महाशयोंकेलिये ही हमने पांचवां नियम बनाया है।

प्रार्थी—पन्नालाल बाकलीवाल।



श्रीपरमात्मने नम ।

# सनातनजैनग्रंथमालायाः

प्रथम खड।

स्याद्वादविद्यापतिश्रीमद्विद्यानदस्वामिविरचिता

१

## आप्तपरीक्षा

२

## पत्रपरीक्षा च

श्रीयुत पडितगजाधरलालजैनशास्त्रिणा• सपादिते

ते च

उस्मानाबादनिवासिस्वर्गीयश्रेष्ठिवर्यकस्तूरचद्रस्यात्मजबालचंद्रस्य स्मरणार्थं

श्रीजैनधर्मप्रचारिणीसभाया मन्त्रिणा

श्रीपन्नालालजैनेन

काशीस्थचद्रप्रभानाम्नि मुद्रणयत्रालये

प्रकाशित ।

श्रीवीरनिर्वाणसवत्सर २४३९ । खिष्टाब्द १९१३ ।

प्रथम सस्करण ] ❀ [अस्य खडस्य मूल्यमेको रूप्यक ।

# प्रस्तावना ।

विद्वन्निकर !

प्रावर्तिष्ट किल्वार्हतदुरवबोधानवद्यसिद्धांताकृतबहिष्कृतामभिरूपपर्णयद्विश्वामलकैवल्फलाकलितकेवलिप्रभुवनविलसितानवद्यतत्त्वनिकर तत्त्वाभासतया, हृदयनेलुनकारणनास्तिकाद्यनल्पविगर्हण कैश्चित् । तत्र नोपागच्छतीमेऽस्मत्पुर सर्वथा कलकभाजनता । किल्वार्हतमताचलावस्थानभूतामलतत्त्वोपदर्शनप्रत्यूहव्यूहस्वरूपजिनसत्पथगामिनामेनाय महान् दोष । नियत चैतत्, यातप्रमयनवद्यपरीक्षादक्षमानमोऽपि न हि सदभिमुखानयनमतरा समजसतया परीक्षितु क्षमते। वस्तुतस्तु निखिलमलविरहितात्तमुखविनिर्गताभिप्रायसाकल्य समजसतयानवगच्छमाना अप्यकारणाक्षेपकरणप्रवणा विद्वासोऽपीमे न तत्त्वबुभुत्सुजनसत्करणसरणौ समक्षाभाजनतामुपढौकते तेषामनालोचितपथगामितया रागद्वेषप्रखरमलमलिनात्मत्वेन च परहितप्रतिपादकवचनबहिष्कृतत्वात् उन्मत्तविलसिताक्षेपोपेक्षयोरिव तत्कृताक्षेपोपेक्षयोर्निर्धारितत्वात्, लोकेपि निर्हेतुकमपरमाक्षिपन्नुपेक्षमाणश्च न हि विदुषा पुरस्तादंशमात्रमपि सन्मतिभाजनतां बिभर्ति । अभिमतिरियं किल बलवत्यस्माक यदीमे विद्वांसोनुपेक्षमाणा अनाक्षिपतश्चार्हतमत व्यलोकयिष्यतादर्शयिष्यत चार्हतपथगामिनस्तेभ्यो विचित्रकीटकस्थानभूतकरडकेभ्यो बहिर्निधाय निर्मलहितप्रतिपादनप्रवणानि नैकविधशास्त्राणि तर्हि व्यपलप्स्यत जैनधर्मो जैनेतरप्राज्ञनिकरोपेक्षाक्षेपकभाया, किं च जैनतत्त्वोपदर्शनसामिग्र्यभावे आक्षेपोपेक्षादिकरणहेतुना कुत्रापि प्राक् सूक्तिमत्पथप्रस्थायिपरपूर्वाचार्यदुर्वचनादिस्खलितविलोकनमात्रत एव सर्वथा वेपितमानसा अप्यार्हतसरणिशरणा वय नाद्यापि तद्दुर्वचनकलक प्रमार्ष्टुं समुत्सहते । सहते च साम्प्रतिकजैनेतरविद्वन्निकरमुखजनि सूतनास्तिकनाममार्गीत्यादिदुर्वचनतोमिलपरिहरणप्रवणादित्यायमानशास्त्रराशिं बिभ्राणा अपि तेभ्योऽवज्ञामिति बलवद्वाल्लिशाधिक्यमाक्षिपति जैनानामस्मानतलस्पर्शपारावारे । यावन्नार्हतानवद्यतत्त्वस्वरूपमनभोत्स्यते आर्हतमतबहिर्भूतप्राज्ञमनोदोहो न सप्रतिपत्स्यते तावन्नास्तिकादिजैनेतरविद्वन्निकरमुखजनि"सूतदुर्वचनानां परिमार्जन। अतो दुर्वचनपरिमार्जनाबाधितकारण, जैनतत्त्वमदर्शनमेव जैनेतरविदुषा पुरस्तादस्मद्बुद्धिं परामृशति। तत एव दुर्वचनाहतचित्तस्य निम्नलिखितश्रेष्ठिवर्यसाहाय्यत प्रादुर्भूत किलेद **सनातनजैनग्रथमालाभिधं** कठिनतम कार्य । अत्र च तद्ग्रथसाकल्य प्रकाशपदतामुपलप्स्यते यस्मात् प्रधानतयार्हततत्त्वस्वरूपावबोधक। आशासे शुभेच्छुविद्वत्परिकरो नियतमेतद्ग्रथमालासमुद्घाटितग्रथपारावारविलसिततत्त्वस्वरूपामलाभूतस्वात्महिताबाप्तिसमीहया लेक्ष्यते। नोपेक्ष्यते च नास्तिकाद्यविनीतजनप्रलपितदुर्वचनकक्षां समाश्रित्य पावनमिदमार्हतमत, आत्माहितसपादनप्रवणरागद्वेषौ च क्रक्ष्यते । आर्हतमतपथगमनशालिनामपि पुरस्तादास्माकाभ्यर्थनेय यत्तेऽपि दुर्वचनपरिमार्जनकारणार्हततत्त्वोपदर्शनप्रयासाकुला स्यु । साम्प्रत प्रथमाके, **आप्तपरीक्षापत्रपरीक्षेति**ग्रथरत्नद्वयमुपस्थाप्यते, एतद्ग्रथमालातो विदुषां पुरस्तात्। प्रणेता किलैतद्रत्नद्वयस्य स्याद्वादपतिर्विभु **श्रीविद्यानद**स्वामी । महात्माय कदा कुत्र कतम पत्तनमात्मीयवैदुष्येण विभूषयामासेत्यवगमिष्यति पाठकपरिकरो महोदयस्यैतज्जीवनविषयकोल्लेखनविलोकनत ।कीदृशमेतद्वैदुष्य जैनतत्त्वस्वरूप च कीदृशमिति प्रकटीकरणाय न व्यतीमो वय विफल स्वीय समय, विज्ञास्यते स्वयमेव विद्वत्सदोह , एत महोदयकरविलसितग्रथद्वयभरिततत्त्वस्वरूपामृतपानतएव । महात्मैतत्करविलसितभाष्यभूताष्टसहस्रीश्लोकवार्तिकादिनिधिग्रथसदोहदिवाकरोऽपि विद्योतते जैनधर्ममेव । सदोहेऽस्मिन् केचन ग्रथा मुद्रणपथमानीता आनेष्यते च केचनाविलबितकालएवेति नात्र सशीति । सतुष्यति ग्रथानिमान् विलोक्य प्राज्ञपरिकर इति दृढीयसी विश्वस्तिश्च ।

**न हि वारणपर्याण वोढु शक्तो वनायुजः ।**

इति नीतिविद्वचनानुसरणसरणिप्रवेशे प्रखरवैदुष्यमार्तंडमयूखनिकरसकलभुवनविद्योतकविभु श्रीविद्यानदी क्व, क्वाह ज्ञानलवानतभागेनापि विरहितात्मा मूढधी इति दुरवबोधग्रथरत्नद्वयसपादनाय न वरी-

वर्ति सामर्थ्यलेशोऽपि मयि । तथापि प्रखरधार्ष्ट्यवशंवदात्मतया श्रीमत्प्रकाशकमहोदयैर्मद्वाह्समारोपि तभारतया चारोपीदं कार्यं मया । सौकर्ये मामकीं रमनवगणय्यमानोऽनगच्छमानश्च प्राथमिकं कार्यमिदं नियतं क्षमिष्यते विद्वत्परिकरो बहुत्रात्र मत्स्खलितविलोकनात्, इति विराजते प्राशप्रवरसन्निष्टे निनतिततिर्महती

पूज्यपादश्रीमन्मत्सहोदरादिचक्षुरादिरुग्निकरकारणकलापे समुपस्थिते मदनुपस्थितावनुष्ठितं भूरि-साहाय्यमेतद्ग्रंथसंशोधनानेहसि महनीयविद्वद्वरपंडितलालारामैस्ततोऽस्म्यहमनुग्रहभाजनं चिरमुक्तपावनात्मनां ।

उस्मानाबादमण्डनायमानश्रेष्ठिवर्यश्रीमद्धालचन्द्रकस्तूरचन्द्रात्मजश्रीमन्नेमिचन्द्रप्रभृतिभिरार्हतमतसमुद्धरणाय चाविर्भावाय तदनवद्यतत्त्वस्वरूपं भुवि, प्रथरत्नत्रयप्रकाशाय साकल्येन स्वकरसंपादितपवित्रद्रव्यव्ययम कृतं तेषामयं महाननुग्रहः । प्रार्थ्यंते चेमे पुरस्तादापीत्थमेवोपकृतये सकलजनहितकराये ।

उपाध्यायमहनीयपदविभूषितमित्रवरश्रीमत्पण्डितवासुदेवनेमिनाथप्रेषितैकाप्तपरीक्षाप्रतिमूर्तिर्मे पार्श्वे । सा च प्रायोऽतीवशुद्धासीत्ततएव मुद्रितं किलाप्तपरीक्षाभिधं महद्रत्नमित्येतदनुष्ठितसाहाय्याय चिरमनुगृहीतोऽस्मि श्रीमदुपाध्यायानां ।

ईडरपत्तनभारतीभवनादप्येतद्ग्रंथमुद्रणसाहाय्याय पुस्तकमेकं समुपलब्धं तच्च शुद्धतममासीत् । पुरातनकरनिर्लिखितग्रथानेकानुस्वारप्रणपरिपाटीविलोकनतो प्रथमावैतद्विलसितग्रंथसाकल्ये पंचमाक्षरमुपेक्षमाणैरस्माभिरनुस्वारसत्कृतिरेवाकृत भूरितया ।

प्रस्तावनोल्लेखे समुत्तरनिबंधसंकलने संपादने चैतद् प्रथरत्नत्रयस्य यत्र भूत्कुत्रापि मात्राक्षरादिस्खलितं मामकीनं तन्नियतं क्षमार्हमेवेति मुहुर्विदुषां पुरस्ताद्विनतशिरसाभ्यर्थना ।

| | |
|---|---|
| काशी<br>भाद्रपदकृष्णा प्रतिपत्<br>वीरनिर्वाण संवत् २४३९ । | विदुषामनुचरो—<br>गजाधरलालजैन । |



ॐ

## ग्रंथकर्तुः

## स्याद्वादविद्यापतिश्रीविद्यानदस्वामिनः

# परिचयः ।



( जैनहितैषितः समुद्धृत )

नैकविधप्रखरपाटवनिकरकोविदसाक्षरसदोह !

विदितमेवैतन्निखिलकलाधुरीणाना श्रीमता विदुषा यद्दर्शनन्यायाद्यनेकविषयपारगामीनि भूयांसि विद्वद्रत्नानि परिभूषयाचक्रिरे रत्नगर्भेत्यन्वर्थसज्ञा बिभ्रतीमिमा वसुधरा । तत्र समुपालेभे दिगबरजैनसप्रदाये दार्शनिकनैयायिकादिविद्वत्परिपाट्यां दार्शनिको नैयायिकश्च श्रीमद्विद्यानदी विद्यानदस्वामी वा प्राकर्ष्येण विश्रुतिं। वैदुष्य खल्वेतस्य महोदयस्यानन्यजनसमन्वयेन समजनिष्ट । अद्याप्येतत्करसरोरुहलालितविविधविषयसुगधभरितानेकग्रथसमुदयमारुतो व्याप्नोति तत्कीर्तिगध सर्वासु दिक्षु । भविष्यति च यावद्दर्शनन्यायादिविषयसत्कृति. सस्तुतौ व्याप्स्यत्येव तत्कीर्तिगधमभित स हि—

पात्रकेसरीति ।

महात्मन किलैतस्य विद्यानदिस्वामिन पात्रकेसरिसंज्ञयापि भुवि विश्रुति पराघर्तिष्ट अभिमतिरिय किल विषयेऽस्मिन् भूयसा विदुषा यत्पात्रकेसरीत्यनन्यसज्ञा दधानोऽपर एव कश्चित्समजनि विद्वान्, किंतु निम्नलिखितप्रमाणपरिपाट्यानसीयते यत् पात्रकेसरीत्यपरनामभाग विभुर्विद्यानंद एव सवृत्तो नान्य ।

सम्यक्त्वप्रकाशग्रथे समुद्दोषितमेकन—

"तथा श्लोकवार्तिके विद्यानद्यपरनामपात्रकेसरिणा यदुक्त तच्च लिख्यते तत्त्वार्थश्रद्धान सम्यग्दर्शन, ननु सम्यग्दर्शनशब्दनिर्वचनसामर्थ्यादेव सम्यग्दर्शनस्वरूपनिर्णयादशेषतद्विप्रतिपत्तिनिवृत्तेः सिद्धत्वात्तदर्थं तल्लक्षणवचन न युक्तिमदेवेति कस्यचिदारेकामपाकरोति ।

अत्र सदर्भे श्लोकवार्तिकप्रणेता विद्यानद एव सूचित ।

किं च श्रवणबेलगुलपत्तनमडनायमानश्रीदौर्बलिजिनदासशास्त्रिनिहितग्रथसग्रहे यो हि ताडपत्रोपरिखचितादिपुराणग्रथस्तट्टिप्पण्यामपि पात्रकेसरिसज्ञा दधानो विभुर्विद्यानद एवेत्युद्घोषित ।

अपरच श्रीब्रह्मनेमिदत्तकरकमलकलितकथाकोषविलसितपात्रकेसरिकथातोपीत्थमेवानुमीयते परापरविचारपरिपाट्या, यदुल्लेख स हि विद्यानदस्यैव नापरस्येति ।

अन्यच श्रीमद्वादिचद्रसूरिणापि स्वकरकलितज्ञानसूर्योदयनाटकतुरीयांके पात्रीभूतयाष्टशत्याख्यया स्त्रिया पुरुष प्रति ख्यापित, यत्—

"देव ततोऽहमुत्तालितहृदया श्रीमत्पात्रकेसरिमुखकमल गता तेन साक्षात्कृतसकलस्याद्वादाभिप्रायेण लालिता पालिताष्टसहस्रीतया पुष्टिं नीता । देव ! स यदि नापालयिष्यत् तदा कथ त्वामद्राक्षम्" ।

अयमाकूत किलैतस्य सदर्भस्य यदस्ति श्रीमद्भट्टाकलककरनिर्मिताष्टशतीसज्ञको दुरवबोधोग्रथ, तदनयचतात्पर्यमनवगच्छमाना कियतो विद्वान्स मानपित्तज्वरवशवदात्मतयानवधमपि तत्तात्पर्यक्षीर विप-

रीतमेतामीकुर्वाणाश्च सुपिता सत्रभूवु आचत्रमुख सद्भूपरि । विज्ञेश्य सद्विनीतवृत्तिमिमां श्रीमद्विद्यानन्दि प्रभु विरचयामास तदाशय समजसतया विशदीकुर्वाणाष्टसहस्रीसंज्ञक भाष्यग्रन्थ । अतोनुमीयते श्रीमदष्टसहस्रीरचयिता पात्रकेसर्यपराभिधानो विद्यानन्दस्वाम्येवेति ।

अन्यच्च हुमचानगरशिलालेखादद्भुतचरमनामतोऽपि विद्यानन्देन पात्रकेसरीति विनिर्धार्यते ।

इति प्रमाणपञ्चकेनावगम्यते निस्संशय निश्चितविद्यानन्देन पात्रकेसर्यपराभिधानो नापर इति ।

विज्ञायते किञ्चिदस्माभिर्यन्मगधदेशान्तर्गतीय महात्मार्हत्सदीक्षादीक्षितानामभूत्तावदेव पात्रकेसरीत्यभिहितिमधत्त । आर्हतपथानुगामिसमये तु निर्ग्रन्थजनवन्द्यानन्दो विद्यानन्दसंज्ञामभार्षीत् अतएव श्रीब्रह्मनेमिदत्तमहोदयेनैतदार्हतपथानुगामित्वोद्दिष्टेव यावज्जीव यय महात्मा जैनमार्गानुगामी तावत्पात्रकेसरीत्यभिधया विज्ञापित । जैनधर्मदीक्षादीक्षितत्व तु विद्यानन्दिनामेति तत एव महात्माय पुरातनम्नीयनामोद्दिष्टनानानवद्यकलामनगच्छमानो नाविर्भावयाञ्चक्रे पात्रकेसरीत्यात्मीय प्राचीन नाम कुत्रापि स्वकरकलितग्रन्थसंदोह ।

निगुरुय विद्यानन्दी समजनि खलु नन्दिसघस्याचार्य इत्यनुमीयते । न खलु निश्चयेन प्रतिपादयितु शक्यते । विदुषस्तस्य किन्तु तस्य दीक्षाचार्य क कश्चोपाध्यायपदाधिरूढोऽभूदिति न समजसतयावसीयतेऽस्माभि । कतमेऽपि स्वकररचितग्रन्थे समुल्लेखोऽपि न कृतोनेन स्वामिना स्वगुरुपरपराया ।

## पात्रकेसरिकथा ।

भट्टारक श्रीमत्प्रभाचन्द्रब्रह्मनेमिदत्ताभ्यां या स्वरचितकथाकोशग्रन्थे पात्रकेसरिण कथा विलिखिता सतएव किञ्चिद् विधीयते न ततोऽधिक किमप्यनवद्यप्रतिभस्यैतस्य विदुषो जीवनेतिहासे समीचीनतयाऽवगम्यते वेदयति किलाऽस्मदेशीयेतिहाससामिग्र्यभावोयमस्म मन ।

श्रीमतो पात्रकेसरिण किलेत्थ कथा—

आसीत्स्म कश्चिन्मगधदेशान्तःऽहिच्छत्रपुरेऽवनीपसनो विभ्राणोऽवनिपालोनामावनिपाल तस्य च परिषदि वेदवेदांगादिविविधविषयपारावारपारदर्शिन शतपञ्चकब्राह्मणविद्वत्तानि समभूवन् । राजधान्यां च तस्यावनिपालस्य राजतेस्म कश्चिन्नानाविधमणितोरणादिविभूषित श्रीपार्श्वजिनेन्द्रमन्दिर —अथ कदाचित्ससजनि कुतूहलस्तेषां विदुषां पार्श्वजिनाख्य विलोकयितु । यदा च सर्वे त त विलोकयितुमगमन् तदा तत्र पार्श्वजिनाभिमुखीभूय जिनभक्तिवशगतश्चारित्रभूषणाभिधान कश्चित्परमर्षि देवागमस्तोत्र पठन् दृष्टिगोचरतां समापतत् । समाकर्ण्य च त मुनिलपननि सूतस्तोत्रमनोच्चवद यतमानविद्वदग्रणी श्रीमत्पात्रकेसरी विदांवर । मुने ! समजसतयाभाति किल भवल्लपननि सूत स्तोत्रमिद अनुगृह्य मुहु श्रावयतु पापन्वेदमिति श्रुत्वा भक्तिवशावदतद्विज्ञवचन, यतिभगादिदोष परिहरमाण स मुनि पुनरपि तत्स्तोत्र पठितुमारेभे विद्वान् पात्रकेसरीति तत्तात्पर्य हृदयस्थ सर्माहमाना भक्त्या शुश्राव च । यदा च तत्स्तोत्र परिपूर्णतामगमत् तत्तात्पर्य च श्रीमत्पात्रकेसरिबुद्धिस्थमभूत्, तदात्व एव तस्य विदुष प्रबलदर्शनमोहकर्मण क्षयोपशम सम्प्रत्यपादि । विचचार च स्वचेतसि स यज्जीवाजीवादितत्त्वस्वरूपोपवर्णनमार्हतमार्गानुसार्यागमवच्च नान्यस्येति, स्थित सत्यत्र प्रत्यहमेत महोदयस्य, आर्हतमततत्त्वबुभुत्साऽतां वृद्धि समुपागच्छत् । स्वसहचारिभि सह परावृत्य च निजालयमहामायमेनमेवविषय परामृशन् परन्तु रजन्यां स्वशयनावासे शयानस्य तस्य विदुष साहसिकोय विचारोद्बुद्धो समारगेत् यत् यद्यप्यार्हतमते प्रमाणपद्धति समीचीना किन्त्वनुमानप्रमाणलक्षण किमभिमतमिति नावगत, चिन्तापारावारे निमग्ने सत्येव तस्मिन् विदुषि अवगतिवितस्तत्तात्पर्य जानती भगवती पद्मावती पुरस्तात्समुपस्थायाऽवोचत् प्राज्ञप्रवर ! नैवचिन्ताभाजनमसि । भगवत्पार्श्वदर्शनसमयएवते उल्लासातिपरावृत्तिर्भविष्यति भवता । विनाश्यते चानवद्यानुमानस्वरूपमित्युक्त्वानन्तरखात् गत्वा च जिनालये पार्श्वजिनफणमण्डपोपरि लिलिलेख च ।

१ ब्रह्मचारी नेमिदत्तार्य समजनि किल भट्टारकमल्लिभूषणशिष्यो । अभूदय १६ तमायां शताब्दौ । भट्टारकप्रभा ब्रह्मचारिणा पद्यानुवादाविहित ।

"अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किं । नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किं" ॥

इत्यनवद्यपद्यम् ।

अपरस्मिन्नहनि विद्वान् स हि पात्रकेसरी प्रत्यूषसि सप्रत्ययमागत्य पार्श्वजिनमंदिरे । परायत्ते च तस्य महात्मनोऽगम्यमहातिशयभगवत्फणोपरि दृष्टिसंपाते श्रीमद्देवागमपद्युगेशायत्तचितानवद्यपद्यं पठित्वा । निर्धारितं चैतत्तेन यदन्यथानुपपन्नत्वस्य व्याप्तिज्ञानमेवानवद्यानुमानं, रीत्या किलानया सप्रत्ययभूततद्हृदीयं महती विश्वासिर्यत्, भगवदर्हन्त्राप्तस्तद्रूपनानिर्भूतधर्मएव लोकद्वयसुखानहो महान् धर्मः, तदनु श्रीपात्रकेसरिविदुषा स्वसहचारिणा पुरस्तादप्याहतत्वमप्रशंसा कृता उपदिष्टाश्च ते । तदुपदेशमश्रोतुकामा द्विपतश्च शास्त्रार्थमार्गेण पराभूता तथा च पश्चात्ते श्रीमत्पात्रकेसरिविदुष्यग्निाकरस्य पुरस्तादात्मीयवदुष्य दीपकल्पं विज्ञाय सहावनिपालभूपतिना सर्वे ते अनवद्यार्हतधर्मसेविनः संप्रतिपेदिरे । कथयानया परमिदमेवानुगम्यते विभु श्रीविद्यानन्दी मगधराज्यान्तर्गताहिच्छत्रपुरनिवासी ब्राह्मणकुलोत्पन्नश्चासीत् जैनधर्मधारणात्प्रागयं महात्मा नैयायिकमीमांसकादिवैदिकान्यतमधर्मानुयायीचाभूत् । सम्प्रत्यपि अहिच्छत्रस्थानं अहिक्षितिपार्श्वनाथाभिधया भुवि वर्तते रामनगरोऽप्यस्यैवापराभिधा । स्थानमिदमुत्तरप्राते बरेलीपत्तनासन्नेऽस्ति । श्रीपार्श्वजिनद्यायामत्केवलबोधानातिशयैव समजनि । अकृत च कमठासुरोऽत्रैवानल्पोपसर्गं पार्श्वजिनोपरि । निवृत्ते च उर्वीभूयवरणेन्द्रेण तत् अतोऽस्त्यद जैनानां पावनं क्षेत्रं । आमनति च भक्तिनिरतास्ते तत् । एतत्क्षेत्रस्य पार्श्वजिनाख्यतो समस्ति भुवि महती विश्रुतिः क्षेत्रस्यास्य । अभूदत्र कश्चिदवनिपालो भूपाल (?) प्रसंगात्तस्य राजधान्यामतो क्षेत्रमिदमितिनिर्णयाय न वरीवर्ति पार्श्वेऽस्माकं किमपि बलवत्तरं गमकं ।

## विद्यानंदिनिवासस्थितिः ।

विभुर्विद्यानन्दी उत्तरप्रातमलंचकारेति दिग्वेनोद्बोध्यते कथयानया किं तु दाक्षिणात्यकार्णाटिकप्रथकर्त्तृभिरेव तज्जीवननिषयकोल्लेखविशेषकरणात् दक्षिणकर्णाटकशिलालेखेष्वेव तदुल्लेखविशेषदर्शनाच्च निष्प्रत्यूहं निश्चीयतेऽस्माभिर्यदयं विद्वान् दाक्षिणात्यः कार्णाटिक एव नासीत् । किं च यस्मिन् समये श्रीमानयं परजनहितप्रतिपादनतया दाक्षिणं कार्णाटिकं वा भारतवर्षभागमलंचकार तदाते एव स हि भारतवर्षभागः शंकरभट्टमंडनमिश्रप्रभृतिवैदिकविदुषां जैनविदुषां चासीद्विवादास्पदं, श्रीमद्भट्टाकलंकप्रभाचन्द्रजिनसेनमाणिक्यनंद्यादिजैनाचार्या अपि तत्समकालीना एव समभूवन् स हि समयः प्रदेशश्च तथाविध एवासीत् यदत्र विद्यानंदिसदृशप्रखरविद्वद्भिरेव भवितव्यं ।

कर्णाटकदेशस्थशिमोगाप्रांतान्तर्गतहुमचाग्रामप्राप्तशिलालेखे येषां येषां भूपतीनां सभासु विभुर्विद्यानंदी प्रखरविद्वद्भिः शास्त्रार्थेण विजयमवापेत्युल्लेखो वर्तते ते सर्वे भूपतयो दाक्षिणात्याः कार्णाटिकाश्चासन्निति प्रमाणेनापि दाक्षिणात्येन कार्णाटिकेनैव वा भाव्यं श्रीमद्विद्यानंदिनोत्यनवद्यं निश्चीयते ।

हुमचानगरप्राप्तशिलालेखाभिप्रायमिदं ।

१ । नंजराजपट्टणमहीपतिनंजपरिषदि श्रीमद्विद्यानन्दिस्वामिना नंदनमल्लिभट्टाभिधो विदग्धो विहितानल्पविवादमर्यादया विजिग्ये ।

२ । ह्यानवद्यपर्यंकप्रभावेण श्रीशतवेंद्रनरपतिसभायां श्रीविद्यानंदिविभुना निखिलश्रोतारो विस्मयपदमानीताः ।

३ । शल्वमल्लिभूपतिसंसदि स्वीयामलवचनपाटवपरास्तवादिविदुषः क्षमतेस्म विद्यानंदिप्रभुः ।

४ । सल्वदेवपृथ्वीपतिपरिषदि नैकविधपरवादिमंडलजल्पनविनिर्गतसिद्धांतसंदोहः सिद्धांतामासतयाऽवर्ताहन्यार्हतमतं प्रभावितं ।

५ । विलगीपत्तनमंडननरपतिनरसिंहसंसदि समुद्बोधितः किल प्रभावो जैनमतस्य श्रीमद्विद्यानंदिप्रभुणा ।

आदिपुराणे प्रथमपर्वणि ।

७६० तमशकसंवत्सरात् ७७० तमशकसंवत्सरमध्ये विरचिते किलादिपुराणे श्रीमद्भगवज्जिनसेनाचार्यैरित्यस्यकृतिधया लिखिते अतोनुमीयते यत् ७६० तमशकसंवत्सरस्य अर्थात् ८३८ तमखीष्टाब्दस्य सान्निध्ये व्यस्तारीत् कीर्तिसरणिः श्रीमद्विद्यानन्दिप्रभोः ।

श्रीमदकलङ्कनिवृता समन्तभद्रोक्तिमत्र संक्षेपात् । परमागमार्थविषयामष्टसहस्री प्रकाशयति ॥ १ ॥

इत्यष्टसहस्र्या दशमाध्यायस्यान्तपद्येन श्रीमद्विद्यानन्दिनाष्टशतीकर्तुः श्रीमदकलङ्कदेवस्योल्लेखः कृतः ।

परीक्षामुखप्रणेता **श्रीमन्माणिक्यनन्दिविभुः**, निम्नलिखितपद्येन श्रीमदकलङ्कदेवविद्यानन्दिनौ सस्मार ।

सिद्धं सर्वजनप्रबोधजननं सद्योऽकलङ्काश्रयं विद्यानन्दसमन्तभद्रगुणतो नित्यं मनोनन्दनम् ।
निर्दोषं परमागमार्थविषयं प्रोक्तं प्रमालक्षणं युक्त्या चेतसि चिन्तयन्तु सुधियः श्रीवर्द्धमानं जिनम् ॥१॥

प्रथमाध्याय ।

एवं **श्रीमत्प्रभाचन्द्रैरपि** श्रीमन्माणिक्यनन्दिकरविरचितपरीक्षामुखभाष्यभूतप्रमेयकमलमार्तण्डेऽनेकत्र श्रीविद्यानन्दिना समुल्लेखः कृतः तैरेव च स्वरचितश्रीन्यायकुमुदचन्द्रोदये श्रीमद्भट्टाकलङ्कदेवस्याप्यनेनपद्येन समुल्लेखो विहितः ।

बोधः कोप्यसमः समस्तविषयं प्राप्याकलङ्कं पदं जातस्तेन समस्तवस्तुविषयं व्याख्यायते तत्पदं ।
किं न श्रीगणभृज्जिनेन्द्रपदतः प्राप्तप्रभावः स्वयं व्याख्यात्यप्रतिमं वचो जिनपतेः सर्वात्मभाषात्मकं ॥

एवं **श्रीमज्जिनसेनाचार्यैरपि** अकलङ्कप्रभाचन्द्रपात्रकेसरीतित्रयाणां विदुषामादिपुराणप्रारम्भे संस्तुतिर्विहिता । इमे सर्वे विद्वच्छिरोमणयः समकालीना एवेति निर्णीयतेऽस्माभिः प्रतिपादितोल्लेखसमष्ट्या । क्रमश्चैवं अकलङ्कः, **विद्यानन्दी, माणिक्यनन्दी, प्रभाचन्द्र जिनसेन** इत्येवं पर्यवस्यते । आदिपुराणनिर्माणानेहसि सर्वेषामस्तमायां विदुषां कीर्तिलता, भूमण्डले नितान्तं विस्तृतास्यभिमतिः । श्रीमदकलङ्कदेवैः क्वापि विद्यानन्दाचार्योल्लेखस्याप्यनङ्करणात् सर्वतः प्राक्तनाः अकलङ्क एव सम्प्रत्यपादि अभूवंस्तस्यायेव महनीयत्वसौभाग्यमासीदिति निर्णीतमस्मिन्निति प्रतीयते । समयश्चैतस्य महनीयस्य, राष्ट्रकूटवंशीयसाहसतुङ्ग (शुभतुङ्ग) नरपतिपरिषदि निम्नलिखितपद्यस्य प्रतिपादनात् अष्टमशताब्दावासीदिति । श्रवणबेल्गुलमल्लिषेणप्रशस्तौ निर्लिखितं चैतत्पद्यं ।

राजन् साहसतुङ्ग सन्ति बहवः श्वेतातपत्रा नृपाः किन्तु त्वत्सदृशो रणे विजयिनस्त्यागोन्नता दुर्लभाः ।
तद्वत्सन्ति बुधा न सन्ति कवयो वागीश्वरा वाग्मिनो । नानाशास्त्रविचारचातुरधियः काले कलौ मद्विधाः ॥

— भूपतिश्रीसाहसतुङ्गमहोदयः कृष्णराजाभिधेयमपि प्रापेति समुपालभ्यते विश्रुतिः । नरपतिरयं ७५२–७७५ तमे खीष्टाब्दे समजनिष्टेति दाक्षिणेतिहासे **श्रीदामोदरभांडारकरमहोदयैः** पर्यन्तमितमित्यतोऽपि निर्णीयते श्रीमदकलङ्कदेवा ख्रिस्तस्याष्टमशताब्दी तदुत्तरार्धे वा प्रतिपद्यमानमलङ्कुर्वाणादिह भारतवर्षे निःसंशयं ।
तथा बोधः कोप्यसमः इत्युपरिसमुद्धृतपद्यतोऽप्येवं प्रतीयते यद्भट्टारकप्रभाचन्द्रः श्रीमद्भट्टाकलङ्कान्तेवासी

१ विलोकयन्तु जैनग्रन्थरत्नाकरकार्यालयद्वाराप्रकाशितविद्वद्रत्नमालायां जिनसेनगुणभद्राचार्यशीर्षकं निबन्धं ।
२ ताडपत्रापरिलिखितोऽयं प्रतिमूर्तेरस्य प्रयासः श्रवणबेल्गुलमठे विद्यते ।
३ चन्द्रांशुशुभ्रयशसं प्रभाचन्द्रकविं स्तुवे । कृत्वा चन्द्रोदयं येन शश्वदाह्लादितं जगत् ॥४७॥
४ स्वकृतनिरूपितप्रमेयकमलमार्तण्डप्रान्ते निम्नलिखितपद्याभ्यां श्रीमत्प्रभाचन्द्राचार्यैः श्रीमत्पद्मनन्दिरत्ननन्दिनौ स्वगुरू स्थापितौ अतोनुमीयते यदयं महात्मा प्रभाचन्द्रः प्राक् श्रीमदकलङ्कदेवचरणसान्निध्यमुपेत्य चाधीत्य विद्यां जग्राह श्रीमत्पद्मनन्दिरत्ननन्दिनोः सकाशे, आर्हतीं दीक्षां । ततः समजनिष्टातीव महामना दीक्षागुरू श्रीपद्मरत्ननन्दिनौ अथवा पूर्वमकलङ्कदेवचरणसान्निध्ये विद्यामधीत्य पश्चादनयोः पार्श्वेऽध्ययनतोऽपि तयोरेव महामनाः गुरुत्वमगमत् ॥

समुपादाच्च श्रीमदकलंकचरणपंकेरुहपरागप्रभावत एव जगत्प्रख्यातिमुपेयुष्य ॥ प्रभाचन्द्रैश्चास्कृत स्वकरविलसितग्रंथे श्रीमद्विद्यानंदिसमुल्लेखस्ततोनिर्धार्यते श्रीमद्भट्टाकलंकप्रभाचन्द्रयोरवातर एव समय श्रीमद्विद्यानंदस्तित्वस्य । एवं ७१३ तमस्रीष्टाब्दात् (नरपतिकृष्णराजराज्यप्रारंभत ), ८३८ तमादिपुराणनिर्णीतसमयावांतरे, श्रीभट्टाकलंकविद्यानंदिप्रभृतिविदुषामवसीयते काल ।

यदा निश्चित श्रीमत्प्रथमजिनसेनैर्हरिवंशपुराणे न तावदुपालेभिरे श्रीमदकलंकविद्यानंदिप्रभृतिसूरिणो मुनि विश्रुतिं । अथवा न व्यरचयिषतेमे तावदष्टशत्यष्टसहस्र्यादिप्रसिद्धग्रंथान् । यतो हि हरिवंशपुराणप्रारंभे स्वपूर्वकालीनसिद्धसेनसमंतभद्रदेवनन्द्याचार्यान् स्तुवंत ,कुतस्तत्स्तवन तदात्वे यत्किंचिद्ग्रंथरचनानिर्माणकृताभ्यासस्य श्रीमद्द्वितीयजिनसेनस्य, नाकलंकविद्यानंदिप्रभृतयो विद्वान्स स्तुतिपथमगु श्रीमत्प्रथमजिनसेनस्येत्यतोऽप्यनुमीयते यद्यदीमो श्रीमद्भट्टाकलंकविद्यानंदिनौ श्रीमत्प्रथमजिनसेनसमये ग्रंथकर्तारौ प्राभूता तदा हरिवंशपुराणप्रारंभे नियत स्तुतिभाजनतामुपालेभाते । हरिवंशपुराणनिर्माणसमयश्च ७८४ तमे ख्रीष्टाब्दे । ततोकलंकविद्यानंदिनो विशेषविश्रुतिसमयो ग्रंथप्रणेतृत्वसमयश्च ७८४ तमस्रीष्टाब्दानन्तरमेव निर्धारणीय ।

भर्तृहरिकुमारिलेतिस्वकरविलसिते निबन्धद्वये प्रोफेसरश्रीमत्पाठकै ।इंडियनमेडिकलअंजि-

---

गुरु श्रीनंदमाणिक्यो नंदिताशेषसज्जन । नंदताद्दुरितैकांतरजो जैनमतार्णव ॥ ३ ॥

श्रीपद्मनंदिसैद्धांतशिष्योऽनेकगुणालय । प्रभाचन्द्रश्चिर जीयाद्रत्ननंदिपदे रत ॥ ४ ॥

२ इति श्रीभोजदेवराज्ये श्रीमद्धारानिवासिना परमपरमेष्ठिप्रणामार्जितामलपुण्यनिराकृतकर्ममलकलंकेन श्रीमत्प्रभाचन्द्रपंडितेन निखिलप्रमाणप्रमेयस्वरूपोद्योतपरीक्षामुखपद विवृतमिति प्रमेयकमलमार्तंडप्रशस्तौ विलिखितमित्यतो निर्धार्यते यदमुष्य प्रमेयकमलमार्तंडकर्ता श्रीमत्प्रभाचन्द्रो धाराधीशश्रीमद्भोजराजास्तित्वसमये । कालश्चैतन्नरपते १०२१ तमस्रीष्टाब्दात् १०५९ तमस्रीष्टाब्दात निर्धारित कालेऽमुमिन्नेव शशसाय नृपतिर्भुवि । अतएव न्यायकुमुदचन्द्रोदयप्रणेतृत पृथगय प्रभाचन्द्रः समजनीत्यनुमीयते ॥ यत —

चन्द्रांशुशुभ्रयशस प्रभाचन्द्रकविं स्तुवे । कृत्वा चन्द्रोदय येन शश्वदाल्हादित जगत् ॥

श्रीमज्जिनसेनाचार्यैरमुना पद्येन चन्द्रोदयप्रणेतु , आदिपुराणे स्तुतिरकृत निर्माणसमयश्चादिपुराणस्य ८३८ तमस्रीष्टाब्दसान्निध्ये परंतु नाचन्यनुमानमिद प्रमाणपद प्रमेयकमलमार्तंडन्यायकुमुदचन्द्रोदययोरेकस्यैव कर्तुर्निर्धारणात् मार्तंडचन्द्रोदययोरेकएव कर्तेति चन्द्रोदयप्रारंभलिखितपद्येनानेन सर्वथा स्पष्टीभवति ।

माणिक्यनंदिपदमप्रतिमप्रबोध व्याख्याय बोधनिधिरेष पुन प्रबन्ध ।
प्रारभ्यते सकलसिद्धिविधौ समर्थे मूले प्रकाशितजगत्त्रयवस्तुसार्थे ॥

इत्यतो विज्ञायते यदष्टमस्रीष्टाब्दो वृद्धभोजेत्यपराभिधा दधानोऽपरभोज एवाजनिष्ट धारापुर्यां ।

द्वितीयभोजकालीनोभवत्कश्चित्प्रभाचन्द्र प्राग्वर इत्यत्र प्रमेयकमलमार्तंडभमिकोल्लेखनसमये प्रादर्शि प्रमाणमिद विद्वद्वरश्रीमत्पंडितवंशीधरशास्त्रिभि यत् प्रमेयकमलमार्तंडे श्रीमन्नेमिचन्द्रसैद्धांतिकचक्रवर्तिविरचिता समुद्धृता कियत्यो गाथा । नेमिचन्द्रसिद्धांतचक्रवर्ती च १००० तमे श्रीमन्नरपतिचामुंडरायास्तित्वसमये तत्समयसान्निध्ये वा समुदपादि । कन्नडचामुंडरायपुराणे श्रीमच्चामुंडरायनरपतिना (८९९ तमे स्रीष्टाब्दसमये, उत्तरपुराणप्रणेता) श्रीमद्गुणभद्रस्वामी प्रास्तुत । उत्पत्तिश्च श्रीमच्चामुंडरायभूपते ९७८ तमे स्रीष्टाब्दे समजनिष्टेत्यत , १००० तमे स्रीष्टाब्दे श्रीमच्चामुंडरायास्तित्वमभूदित्यत्र न कापि संशीति । परंतु प्रमेयकमलमार्तंडसमुद्धृतगाथा न श्रीमन्नेमिचन्द्रस्वामिस्वकरविलसिता किंतु परंपरागताएव प्रमेयकमलमार्तंडवन्नेमिचन्द्रैरपि स्वकरविलसितग्रंथसंदोहे ता समुद्धृता , अत प्रमेयकमलमार्तंडचन्द्रोदयरचयिता प्रभाचन्द्र एक एव भुवि समुदपादि व्यरचि च मार्तंडानंतर चन्द्रोदय स इति दृढीयान् प्रत्यय ।

काभिधे ग्रंथे। एम ए इत्यादिविविधपदविभूषितकालिकताकालेजाधिष्ठातृमहोमहापाध्यायश्रीशतीशचन्द्र विद्याभूषणैश्च स्याद्वादपतिश्रीमद्विद्यानन्दास्तित्वसमय ८०० समसाष्टाब्दसान्निध्य एव विनिर्धारित ।

अत प्रमाणपरिपाट्यानयाऽष्टमशताब्दस्य शेषार्द्ध प्रारम्भश्च नवमशताब्दस्येति यथाविध समयोऽस्माभि पूर्वं विज्ञापित सएव श्रीविद्यानन्दस्वाम्यस्तित्वसमय प्रमाणपदमधिरोहति न तत्र कापि सर्शाति । समजनि खल्वय समयो दाक्षिणे कार्णाटिके वैतिहासेऽतीवमहत्वस्य धर्मक्रातिश्चाभूत् महती किल मुनि समयेऽस्मिन्[१]।

जैनवैदिकबौद्धधर्मधुरधरविद्वास समुपालेभिरेऽस्तित्वमेतस्मिन्नेवावसरे, आसीन्न्यायशास्त्रमेतर्हीन्नत्युन्नतिपराकाष्ठामापन्न व्यथस्त किलैतत्कालीननिद्वत्परिकरेण न्यायशास्त्रपथा स्वमतसत्यताविर्भावाय भूयान् प्रयास समजनिषत च तदात्वे वादविवादशास्त्रार्था अवसाने किमजनि धार्मिकविवादफल, विजय च केष्वेषु समुपादात्, विजयश्च सहि वैदुष्येण कारणांतरेण वामुद्दिश्यवाशिष्ट वरीवर्तीतिहासज्ञानां परीक्षणाय । परन्तु नात्र सन्दीतिर्येद्विवादास्तित्वकाले दिगम्बरजैनसम्प्रदायनिकेतनस्तम्भायमानश्रीमदकलङ्कविद्यानन्दादि दिग्विजयिविदुषा दर्शनसौभाग्य नाभूत्प्राङ्गन्येन सर्वेषा[२]।

## ग्रंथरचना ।

दार्शनिको नैयायिकश्च समजनि श्रीमद्विद्यानन्दिप्रभुरिति पूर्वं प्रतिपादितमतएवैष महात्मा विषयद्वयएवास्मिन् प्रधान् व्यरचि एत महोदयवैदुष्यमार्तंडप्रखरमयूखायमान , **आप्तमीमांसालंकारदेवागमालंकृतीत्य** परनामभाक् विश्रुतग्रंथोऽष्टसहस्र्याभिध । श्रीमदुमास्वामिविरचिततत्त्वार्थसूत्रस्योपरि विद्यते गन्धहस्तिमहाभाष्य। तत्प्रारम्भे पंचदशश्लोकशतपद्यविनिर्मिता**आप्तमीमांसाख्य देवागमस्तोत्राभिध** या मंगलाचरण। तदुपरि श्रीमदकलंकदेवरचिताष्टशत्यभिधो ग्रंथस्तद्भाष्यभूतएवायमष्टसहस्र्याभिधो महान् ग्रंथ । अपरश्चैतस्य महात्मनो जैनदर्शनप्रथततत्त्वार्थसूत्रोपरि **श्लोकवार्तिकाभिध** भाष्य तृतीयश्च सामंतभद्रयुक्त्यनुशासनटीकाग्रंथ । **आप्तपरीक्षा**पि विश्रुतग्रंथोस्य महोदयस्य। सतीष्वपि भूयसीषु तद्ग्रंथटीकासु, एत महोदयकरविलसिताप्तपरीक्षालंकृतीत्यपराभिधा टीकास्तिपरीक्षाया । ग्रंथचतुष्टयादस्मात् **पत्रपरीक्षाप्रमाणपरीक्षाप्रमाणमीमांसाप्रमाणनिर्णयविद्यानन्दमहोदययुक्त्यनुशासनव्याख्यान**प्रभृतयोनेक ग्रंथा महात्मैतद्वैदुष्यविलसिता सन्ति भुवि इति समाप्यतेऽथ निबन्धोविधायपत्रपरीक्षा मंगलाचरण ।

जीयान्निरस्तनिःशेषसर्वथैकान्तशासन । सदा श्रीवर्द्धमानस्य शासनं जिनशासन ॥४॥*

विदुषामनुचरो

**गजाधरलालोजैन ।**

---

१ श्लोकवार्तिक लक्ष्यीकृत्य विलिखित श्रीमद्वादिराजसूरिणा पार्श्वनाथचरिते ।

ऋजुसूत्रं स्फुरद्रत्न विद्यानन्दस्य विस्मय । शृण्वतामप्यलकार दीप्तिरङ्गेषु रङ्गति ॥

२ मैसूरकुर्गेनिवासनदूरशिलालेखाभिधे ग्रंथेऽपि मि स्युई राइसमहोदयैरेतद्ग्रंथनामोल्लिखित ।

३ यनाथचरितकाव्यप्रस्तावनाशयमालिखणप्रशस्तिनिर्मात्रोल्लिखितपद्य समुद्धृत्य श्रीपात्रकेसरिणो त्रिलक्षणकदर्थनाभिधाग्रंथ कल्पित परन्तु त्रिलक्षणकदर्थनाभिधानो नापर कश्चिदपि ग्रंथ किंतु पार्श्वजिनप्रकरणोपरि श्रीमत्पात्रकेसद्नुमानविषयकभ्रमनिराकरणाय यत् पद्य न्यलीखि श्रीमत्या पद्मावत्या तस्यैवात्र तात्पर्यं ।

महिमा स पात्रकेसरिगुरो पर भवति यस्य भक्त्यासीत् पद्मावती सहाया त्रिलक्षणकदर्थन कर्तुं ॥ १ ॥

* धारोशभूताय निबन्ध किल श्रीयुततात्यानेमिनाथपांगलविलिखितमहाराष्ट्रीयलखस्य तत्र मूललेखकानेकविचारास्वमतत्वात् परिवर्तितोय बहुभागोस्माभि सद्भाव्यतिहासिकपुस्तकान्तराद् स्वतश्च विचारवाहुल्य समुद्घाटित चात्रेति ।





नमः सिद्धेभ्यः ।

सनातनजैनग्रंथमाला

१.

आचार्यप्रवरश्रीविद्यानंदिस्वामिविरचिता

# आप्तपरीक्षा ।

प्रबुद्धाशेषतत्त्वार्थबोधदीधितिमालिने ।
नमः श्रीजिनचंद्राय मोहध्वांतप्रभेदिने ॥ १ ॥

किमर्थं पुनः परमेष्ठिनः स्तोत्रं शास्त्रादौ शास्त्रकाराः प्राहुरित्यभिधीयते—

श्रेयोमार्गस्य संसिद्धिः प्रसादात्परमेष्ठिनः ।
इत्याहुस्तद्गुणस्तोत्रं शास्त्रादौ मुनिपुंगवाः ॥ २ ॥

श्रेयो निःश्रेयसं परमपरं च । तत्र परं सकलकर्मविप्रमोक्षलक्षणं बंधहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्ष इति वचनात् । ततोऽपरमार्हन्त्यलक्षणं घातिकर्मक्षयादनंतचतुष्टयस्वरूपलाभस्यापरनिःश्रेयसत्वात् । न चाऽत्रकस्य चिदात्मविशेषस्य कृत्स्नकर्मविप्रमोक्षोऽसिद्धः साधकप्रमाणसद्भावात् । तथाहि । कश्चिदात्मविशेषः कृत्स्नकर्मभिर्विप्रमुच्यते कृत्स्नबंधहेत्वभावनिर्जरावत्त्वात् । यस्तु न कृत्स्नकर्मभिर्विप्रमुच्यते स न कृत्स्नबंधहेत्वभावनिर्जरावान् यथा संसारी कृत्स्नबंधहेत्वभावनिर्जरावांश्च कश्चिदात्मविशेषस्तस्मात्कृत्स्नकर्मभिर्विप्रमुच्यते । ननु बंध एवात्मनोऽसिद्धस्तद्धेतुश्चेति कुतो बंधहेत्वभाववत्त्वं, प्रतिषेधस्य विधिपूर्वकत्वात् । बंधाभावे च कस्य निर्जरा, बंधफलानुभवनं हि निर्जरा बंधाभावे तु कुतस्तत्फलानुभवनमतः कृत्स्नकर्मनिर्जरावत्त्वमप्यसिद्धं । न चासिद्धं साधनं साध्यसाधनायालमिति कश्चित्, सोऽप्यनालोचिततत्त्वः प्रमाणतो बंधस्य प्रसिद्धेः । तथा हि । विवादाध्यासितः संसारी बंधवान् परतंत्रत्वादालानस्तंभागतहस्तिवत् । परतंत्रोऽसौ हीनस्थानपरिग्रहवत्त्वात् कामोद्रेकपरतंत्रवेश्यागृहपरिग्रहवच्छ्रोत्रियब्राह्मणवत् । हीनस्थानं हि शरीरं तत्परिग्रहवांश्च संसारी प्रसिद्ध एव । कथं पुनः शरीरं हीनस्थानमात्मन इत्युच्यते । हीनस्थानं शरीरमात्मनो दुःखहेतुत्वात् कस्यचित्कारागृहवत् । ननु देवशरीरस्य तु दुःखहेतुत्वाभावात् पक्षाव्यापको हेतुरिति चेन् न । तस्यापि मरणे दुःखहेतुत्वसिद्धेः पक्षव्यापकत्वव्यवस्थानात् । तदेवं संक्षेपतो बंधस्य प्रसिद्धौ तद्धेतुरपि सिद्धस्तस्याहेतुकत्वे नित्यत्वप्रसंगात् । सतो हेतुरहितस्य नित्यत्वव्यवस्थितेः 'सदकारणवन्नित्यमिति' परैरभिधानात् । तद्धेतुश्च मिथ्यादर्शनाविरतिप्रमादकषाययोगविकल्पात्पंचविधः स्यात् । बंधो हि संक्षेपतो द्वेधा भावबंधो द्रव्यबंधश्चेति । तत्र भावबंधः क्रोधाद्यात्मकस्तस्य हेतुर्मिथ्यादर्शनं, तद्भावे भावाद्भावे चाभावात् । क्वचिदक्रोधादिविषये हि क्रोधादिविषयत्वश्रद्धानं मिथ्यादर्शनं तस्य विपरीताभिनिवेश-

लक्षणस्य सकलास्तिकप्रसिद्धत्वात् तस्य च सद्भावे बहिरंगस्य सत्यवरंगे द्रव्यक्रोधादिबंधे भावबंधस्य सद्भाव तदभावे चासद्भाव सिद्ध एवेति मिथ्यादर्शनहेतुको भावबंध । तद्वदविरतिहेतुकश्च समुत्पन्न सम्यग्दर्शनस्यापि कस्यचित्प्रकृष्टो भावबंध सत्यामविरतौ प्रतीयते एव ततोऽप्यप्रकृष्टो भावबंध । प्रमादहेतुक स्यादविरत्यभावेऽपि, कस्यचिद्विरतस्य सति प्रमादे तदुपलब्धे ततोऽप्यप्रकृष्ट । कषायहेतुक सम्यग्दृष्टेर्विरतस्याऽप्रमत्तस्यापि कषायसद्भाव भावात् । ततोऽप्यप्रकृष्टवपुरज्ञानलक्षणो भावबंधो योगहेतुक क्षीणकषायस्यापि योगसद्भावे तत्सद्भावात् । केवलिनस्तु योगसद्भावेऽपि न भावबंध, तस्य जीवन्मुक्तत्वान्मोक्षप्रसिद्धे । न चैवमेकैकहेतुक एव बंध पूर्वस्मिन् पूर्वस्मिन्नुत्तरस्योत्तरस्य बंधहेतो सद्भावात् । कषायहेतुको हि बंधो योगहेतुकोऽपि प्रमादहेतुकश्च योगकषायहेतुकोऽपि । अविरतिहेतुकश्च योगकषायप्रमादहेतुक प्रतीयते । मिथ्यादर्शनहेतुकश्च योगकषायप्रमादाविरतिहेतुक सिद्ध इति मिथ्यादर्शनादिपंचविधप्रत्ययसामर्थ्यान्मिथ्याज्ञानस्य बंधहेतो प्रसिद्धे पद्मनंदयोऽपि बंधोऽभिधीयते । न चायं भावबंधो द्रव्यबंधमंतरेण भवति, मुक्तस्यापि तत्प्रसंगादिति द्रव्यबंध सिद्ध । सोऽपि मिथ्यादर्शनाविरतिप्रमादकषाययोगहेतुक एव बंधत्वाद्भावबंधवदिति मिथ्यादर्शनादि-बंधहेतु सिद्ध । तदभाव कुत सिद्धादिति चेत् तत्प्रतिपक्षभूतसम्यग्दर्शनादिसात्मीभावात् । सति हि सम्यग्दर्शने मिथ्यादर्शनं निवर्तते तद्विरुद्धत्वात् । यथोष्णस्पर्शे सति शीतस्पर्श इति प्रतीत । तथैवा-ऽविरतिर्विरत्या सत्यामपैति । प्रमादश्चाप्रमादपरिणतौ कषायोऽकषायतया योगश्चायोगतयामिति बंधहेत्वभाव सिद्धोऽपूर्वकर्मणा आस्रवनिरोध संवर, इति वचनात् । ननु च स गुप्तिसमितिधर्मा-नुप्रेक्षापरीषहजयचारित्रेभ्यो भवतीति सूत्रकारमतं न पुन सम्यग्दर्शनादिभ्य इति न मंतव्य । गुप्त्यादीनां सम्यग्दर्शनाद्यात्मकत्वात् । न हि सम्यग्दर्शनरहिता गुप्त्यादय सति सम्यग्ज्ञानरहिता वा तेषामपि विरत्यादिरूपत्वात् । चारित्रभेदा ह्येते प्रमादरहिता कषायरहिताश्चायोगतामपि लभते । ततो न कश्चिद्दोष । कथमात्मन पूर्वोपात्तकर्मणा निर्जरा सिद्ध्येदित्यभिधीयते । कस्यचिदात्मनि कात्स्न्र्येन पूर्वोपात्तानि कर्माणि निर्जीर्यंते तेषां विपाकांतत्वात् । यानि तु न निर्जीर्यंते तानि न विपाकांतानि यथा कालादीनि, विपाकांतानि च कर्माणि तस्मान्निर्जीर्यंते । विपाकांतत्वं नासिद्ध कर्मणा । तथा हि विपाकांतानि कर्माणि फलावसानत्वाद्व्रीह्यादिवत् । तेषामन्यथा नित्यत्वानुषंगात् । न च नित्यानि कर्माणि नित्यं तत्फलानुभवनप्रसंगात् । यत्र चात्मविशेषे अनागतकर्मबंधहेत्वभावादपूर्वकर्मानुत्पत्तिस्तत्र पूर्वोपात्तकर्मणां यथाकालमुपक्रमाच्च फलदानात्कात्स्न्र्येन निर्जरा प्रसिद्धैव । तत कृत्स्नबंधहेत्वभाव-निर्जरावत्त्व साधनं प्रसिद्धं कृत्स्नकर्मविप्रमोक्षं साधयत्येव । ततस्तल्लक्षण परं निःश्रेयसं व्यवतिष्ठते । तथाऽर्हत्त्वलक्षणमपरं सुनिश्चितासंभवद्बाधकप्रमाणत्वात् सुखादिवदिति सर्वज्ञत्वसिद्धौ निर्णेष्यते । श्रेयसो मार्ग श्रेयोमार्गो निःश्रेयसोपायो वक्ष्यमाणलक्षणस्तस्य संसिद्धि संप्राप्ति सम्यग्ज्ञप्तिर्वा सा हि परमेष्ठिन प्रसादाद्भवति मुनिपुंगवाना यस्मात्तस्मात्ते मुनिपुंगवा सूत्रकारादय शास्त्रस्यादौ तस्य परमेष्ठिनो गुणस्तोत्रमाहुरिति संबंध । परमेष्ठी हि भगवान् परमोऽर्हन् तत्प्रसादात्परमागमार्थनिर्णया परस्य परमेष्ठिनो गणधरदेवादे संपद्यते तस्माच्चापरपरमेष्ठिन परमागमशब्दसंदर्भो द्वादशांग इति । परापरपरमेष्ठिभ्यां परमागमार्थशब्दशरीरसंसिद्धिस्तद्विनेयमुख्याना तेभ्यश्च स्वशिष्याणामिति गुरुपूर्व-क्रमात्सूत्रकाराणां परमेष्ठिन प्रसादात्प्रधानभूतपरमार्थस्य श्रेयोमार्गस्य संसिद्धिरभिधीयते । प्रसाद पुन परमेष्ठिनस्तद्विनेयानां प्रसन्नमनोविषयत्वमेव वीतरागाणां तुष्टिलक्षणप्रसादासंभवात्कोपासंभववत् । तदाराधकजनैस्तु प्रसन्नेन मनसोपास्यमानो भगवान् प्रसन्न इत्यभिधीयते रसायनवत् । यथैव हि प्रसन्नेन मनसा रसायनमासेव्य तत्फलमवाप्नुवंत सतो रसायनप्रसादादिदमस्माकमारोग्यादिफलं समुत्पन्नमिति प्रतिपद्यते तथा प्रसन्नेन मनसा भगवंतं परमेष्ठिनमुपास्य तदुपासनफलं श्रेयोमार्गाधि-

गमलक्षणं प्रतिपद्यमानास्तद्विनेयजना भगवत्परमेष्ठिन प्रसादादस्याः श्रेयोमार्गाधिगम सम्पन्न इति समनुमन्यते। तत परमेष्ठिन प्रसादात्सूत्रकाराणा श्रेयोमार्गस्य ससिद्धेर्युक्त शास्त्रादौ परमेष्ठिगुणस्तोत्र। मगलार्थं तदित्येके। तेऽप्येव प्रष्टव्या। किं साक्षान्मगलार्थ परमेष्ठिगुणस्तोत्र परपरया वा। न तावत्साक्षात्तदनतरमेव मगलप्रसगात्। कस्यचिदपि मगलानवाप्त्ययोगात्। परपरया चेत् न किंचिदनिष्ट। परमेष्ठिगुणस्तोत्रादात्मविशुद्धिविशेष- प्रादुर्भवन् धर्मविशेष स्तोतु साधयत्येवाऽधर्मप्रध्वस च। ततो मग सुख समुत्पद्यत इति तद्गुणस्तोत्र मगल मग लातीति मगलमिति व्युत्पत्ते। मल गालयतीति मगलमिति वा। मलस्याधर्मलक्षणस्य परपरया तेन प्रध्वसनात्। केवल सत्पात्रदानजिनेंद्रार्चनादिकमप्येव मगलमिति न तद्गुणस्तोत्रमेव मगलमिति नियम सिद्ध्यति। स्यान्मत मग श्रेयोमार्गसप्राप्तिजनित प्रशमसुख तल्लातत्वात्परमेष्ठिगुणस्तोत्रात्तत्साधक इति मगल परमेष्ठिगुणस्तोत्र। मल वा श्रेयोमार्गससिद्धौ विघ्ननिमित्त पाप गालयतीति मगल तदिति। तदेतदनुकूल न परमेष्ठिगुणस्तोत्रस्य परममगलत्वप्रतिज्ञानात्। तदुक्त—

"आदौ मध्येऽवसाने च मगल भाषित बुधै। तज्जिनेंद्रगुणस्तोत्र तदविघ्नप्रसिद्धये"॥

ननु चैव भगवद्गुणस्तोत्र स्वय मगल न तु मगलार्थमिति न मतव्य। स्वय मगलस्यापि मगलार्थत्वोपपत्ते। यदा हि मलगालनलक्षण मगल तदा सुखादानलक्षणमगलाय तद्भवतीति सिद्ध मगलार्थ। यदापि सुखादानलक्षण तन्मगल तदा पापगालनलक्षणमगलाय प्रभवतीति कथ न मगलार्थ। यदाप्येतदुभयलक्षण मगल तदा तु मगलातरापेक्षया मगलार्थ तदुपपद्यत एव आनि श्रेयसप्राप्ते परापरमगलसततिप्रसिद्धेरित्यल विस्तरेण। शिष्टाचारपरिपालनार्थं नास्तिकतापरिहारार्थं निर्विघ्नत शास्त्रपरिसमाप्त्यर्थं च परमेष्ठिगुणस्तोत्रमित्यन्ये। तेऽपि तदेव तथेति नियमयितुमसमर्था एव। तपश्चरणादेरपि तथात्वप्रसिद्धे। न हि तपश्चरणादि शिष्टाचारपरिपालनाद्यर्थं न भवतीति शक्य वक्तु। यदि पुनरनियमेन भगवद्गुणसस्तवन शिष्टाचारपरिपालनाद्यर्थमभिधीयते तदा तदेव शास्त्रादौ शास्त्रकारै कर्तव्यमिति नियमो न सिद्ध्यति। न च कश्चित्तन्न क्रियते इति वाच्य। तस्य शास्त्रे निबद्धस्यानिबद्धस्य वा वाचिकस्य मानसस्य वा विस्तरत सक्षेपतो वा शास्त्रकारैरवश्य करणात्। तदकरणे तेषा तत्कृतोपकारविस्मरणादसाधुत्वप्रसगात्। साधूना कृतस्योपकारस्याविस्मरणप्रसिद्धे। 'न हि कृतमुपकार साधवो विस्मरति' इति वचनात्। यदि पुन स्वगुरो सस्मरणपूर्वक शास्त्रकरणमेवोपकारस्तद्विनेयानामिति मत। तदा सिद्ध परमेष्ठिगुणस्तोत्र स्वगुरोरेव परमेष्ठित्वात्। तस्य गुरुत्वेन सस्मरणस्यैव तद्गुणस्तोत्रत्वसिद्धेरित्यल विवादेन। किं पुनस्तत्परमेष्ठिनो गुणस्तोत्र शास्त्रादौ सूत्रकारा प्राहुरिति निगद्यते—

मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृतां। ज्ञातारं विश्वतत्त्वानां वंदे तद्गुणलब्धये ॥१॥

अत्र मोक्षमार्गादिपदानामर्थ पुरस्ताद्वक्ष्यते। वाक्यार्थस्तूच्यते। मोक्षमार्गस्य नेतार कर्मभूभृता भेत्तार विश्वतत्त्वाना ज्ञातारमह वदे तद्गुणलब्ध्यर्थित्वात्। यो यद्गुणलब्ध्यर्थी स त वंदमानो दृष्ट। यथा शास्त्रविद्यादिगुणलब्ध्यर्थी शास्त्रविद्यादिविद तत्प्रणेतार च। तथा चाह मोक्षमार्गप्रणेतृत्वकर्मभूभृद्भेतृत्वविश्वतत्त्वज्ञातृत्वगुणलब्ध्यर्थी। तस्मान्मोक्षमार्गस्य नेतार कर्मभूभृता भेत्तार विश्वतत्त्वाना ज्ञातार वदे इति शास्त्रकार शास्त्रप्रारभे श्रोता तस्य व्याख्याता वा भगवत परमेष्ठिन परमपर च मोक्षमार्गप्रणेतृत्वादिभिर्गुणै सस्तौति। तत्प्रसादाच्छ्रेयोमार्गस्य ससिद्धे समर्थनात्। किमर्थं पुनरिद भगवतोऽसाधारण विशेषण मोक्षमार्गप्रणेतृत्व कर्मभूभृद्भेतृत्व विश्वतत्त्वज्ञातृत्व चात्र प्रोक्त भगवद्भिरित्याह—

इत्यसाधारणं प्रोक्तं विशेषणमशेषतः ।
परसंकल्पिताप्तानां व्यवच्छेदप्रसिद्धये ॥ ३ ॥

परैर्वैशेषिकादिभिः संकल्पिताः परसंकल्पितास्ते च ते आप्ताश्च परसंकल्पिताप्ता महेश्वरादयः तेषामशेषतो व्यवच्छेदप्रसिद्ध्यर्थं यथोक्तमसाधारणं विशेषणमाचार्यैः प्रोक्तमिति वाक्यार्थः । न हीदमीश्वरकपिलसुगतादिषु संभवति बाधकप्रमाणसद्भावात् । भगवत्यर्हत्येव तत्सद्भावसाधनाच्चा-साधारणविशेषणमिति वक्ष्यामः । ननु चेश्वरादीनामप्याप्तत्वे किं दूषणं येन तद्व्यवच्छेदार्थमसाधारणं विशेषणं प्रोच्यते किं वान्ययोगव्यवच्छेदान्महात्मनि परमेष्ठिनि निश्चिते प्रतिष्ठितं स्यादित्यारे-कायामिदमाह—

अन्ययोगव्यवच्छेदान्निश्चिते हि महात्मनि ।
तस्योपदेशसामर्थ्यादनुष्ठानं प्रतिष्ठितं ॥ ४ ॥

भवेदिति क्रियाध्याहारः । ननु चाप्तान्यपामन्ययोगव्यवच्छेदाभावेऽपि भगवतः परमेष्ठिन-स्तत्त्वोपदेशादनुष्ठानप्रतिष्ठामियर्त्येव तेषामविरुद्धभाषित्वादिति चेन्न । परस्परविरुद्धसमयप्रणयनात् तत्त्वनिश्चयायोगात् तदन्यतमस्याप्युपदेशप्रामाण्यानिश्चयादनुष्ठानप्रतिष्ठानुपपत्तेः । ननु मोक्षो-पायानुष्ठानोपदेशमात्रे नेश्वरादयो विप्रपद्यन्ते ततोऽर्हदुपदेशादिवेश्वराद्युपदेशादपि नानुष्ठानप्रतिष्ठानु-पपत्तिर्यतस्तद्व्यवच्छेदेन परमेष्ठी निश्चीयत इति कश्चित् । सोऽपि न विशेषज्ञः सम्यग्मिथ्योपदेश-विशेषाभावप्रसंगात् । स्यान्मतं । वैशेषिकैरभिमतस्याप्तस्य निःश्रेयसोपायानुष्ठानोपदेशस्तावत्समीचीन एव बाधकप्रमाणाभावात् । श्रद्धाविशेषोपगृहीतं हि सम्यग्ज्ञानं वैराग्यनिमित्तं परां काष्ठामापन्नमत्य-निःश्रेयसहेतुरित्युपदेशः । तत्र श्रद्धाविशेषस्तावदुपादेयमुपादेयतया हेयेषु हेयतयैव श्रद्धानं । सम्य-ग्ज्ञानं पुनर्यथावस्थितार्थाधिगमलक्षणं, सद्धेतुकं च वैराग्यं रागद्वेषप्रक्षयः एतदनुष्ठानं च तद्भावना-भ्यासस्तस्यैतस्य निःश्रेयसोपायानुष्ठानस्योपदेशो न प्रत्यक्षेण बाध्यते । जीवन्मुक्तेस्तत एव प्रत्यक्षतः कैश्चित् (केषाचित्) स्वयं संवेदनात् । परैः सद्पायासविमुक्तेरनुमीयमानत्वात् । जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यत इत्युपदेशाच्च नानुमानागमाभ्यां बाध्यते जीवन्मुक्तिवत् । परममुक्तेरप्यत एवानुष्ठानात् संभावनोपपत्तेः । नचान्यत्प्रमाणं बाधकं तदुपदेशस्य तद्विपरीतार्थव्यवस्थापकत्वाभावा-दिति । तदपि न विचारक्षमं । श्रद्धादिविशेषविषयाणां पदार्थानां यथावस्थितार्थत्वासंभवात् । द्रव्यादयो हि षट्पदार्थास्तावदुपादेया सदात्मानः प्रागभावादयश्चासदात्मानस्ते च यथा वैशेषिकैर्वर्ण्यंते तथा न यथार्थतया व्यवतिष्ठंते तद्ग्राहकप्रमाणाभावात् । द्रव्यं हि गुणादिभ्यो भिन्नमेकं, गुणश्चेतरेभ्यो भिन्न एकः, कर्म चैकमितरेभ्यो भिन्नं सामान्यं चैकं, विशेषश्चैकः पदार्थः समवायवत् यद्यभ्युपग-म्यते तदा द्रव्यादयः षट्पदार्थाः सिद्ध्येयुः । न च द्रव्यपदस्यैकोऽर्थः परैरिष्यते गुणपदस्य कर्मपदस्य सामान्यपदस्य विशेषपदस्य च, यथा समवायपदस्यैकः समवायोऽर्थ इति कथं षट्पदार्थव्यवस्थितिः । स्यान्मतं । पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणि द्रव्यपदस्यार्थ इति कथमेको द्रव्य पदार्थः ? सामान्यसंज्ञाभिधानादिति चेत् न । सामान्यसंज्ञाया सामान्यवद्विषयत्वात् । तदर्थस्य सामा-न्यपदार्थत्वे ततो विशेषेष्वप्रवृत्तिप्रसंगात् । * द्रव्यपदार्थस्यैकस्यासिद्धेश्च । पृथिव्यादिषु हि द्रव्यमिति संज्ञा द्रव्यत्वसामान्यसंबंधनिमित्ता । तत्र द्रव्यत्वमेकं न द्रव्यं किंचिदेकमस्ति । द्रव्यलक्षणमेकमिति चेन् तत्किमिदानीं द्रव्यपदार्थोऽस्तु न चैतद्युक्तं लक्ष्यस्य द्रव्यस्याभावे तल्लक्षणानुपपत्तेः । पृथिव्यादीनि

* सामान्यरूप = द्रव्यपदार्थ—

लक्ष्याणि क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणं यदि प्रतिज्ञायते । तदानेकत्र लक्ष्ये लक्षणं कथमेकमेव प्रयुज्यते तस्य प्रतिव्यक्तिभेदात् । न हि यदेव पृथिव्या द्रव्यलक्षणं तदेवोदकादिष्वस्ति तस्यासाधारणरूपत्वात् । यदि पुनर्द्रव्यलक्षणं पृथिव्यादीनां गुणादिभ्यो व्यवच्छेदकतया तावत्साधारणो धर्मः पृथिव्यादिषु नवस्वपि सद्भावात्साधारणं कथमन्यथातिव्याप्त्यव्याप्ती लक्षणस्य निराक्रियेते सकललक्ष्यवस्तुषु हि व्यापकस्य लक्षणस्याव्याप्तिपरिहारस्तदलक्ष्येभ्यश्च व्यावृत्तस्यातिव्याप्तिपरिहारः । सकलैर्लक्ष्यलक्षणज्ञैरभिधीयते नान्यथेति मतिः । तदापि नैको द्रव्यपदार्थः सिद्ध्यति । द्रव्यलक्षणादन्यस्य लक्ष्यस्य द्रव्यस्यैकस्यासंभवात् । नवापि पृथिव्यादीनि द्रव्याण्येकलक्षणयोगादेको द्रव्यपदार्थ इति चेत् न । तथोपचारमात्रप्रसंगात् । पुरुषो यष्टिरिति यथा यष्टिसाहचर्याद्धि पुरुषो यष्टिरिति कथ्यते न पुनः स्वयं यष्टिरित्युपचारः प्रसिद्ध एव तथा पृथिव्यादिरनेकोऽपि स्वयमेकलक्षणयोगादेक उपचर्यते न तु स्वयमेक इत्यायातं । न च लक्षणमप्येकं पृथिव्यादिषु पंचसु क्रियावत्त्वस्यैव क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणस्य भावात् निःक्रियेष्वाकाशकालदिगात्मसु क्रियावत्त्वस्याभावात् । गुणवत्समवायिकारणमित्येतावन्मात्रस्य ततोऽन्यस्य द्रव्यलक्षणस्य सद्भावात् लक्षणद्वयस्य प्रसिद्धेः । तथा च द्रव्यलक्षणद्वययोगात् द्वावेव द्रव्यपदार्थौ स्यातां । यदि पुनर्द्वयोरपि द्रव्यलक्षणयोर्द्रव्यलक्षणत्वाविशेषादेकं द्रव्यलक्षणमित्युच्यते तदापि किं तद्द्रव्यलक्षणयोर्द्रव्यलक्षणत्वमेकं न तावत्सामान्यं तस्य द्रव्यगुणकर्माश्रयत्वात् । न चैते द्रव्यलक्षणे । द्रव्ये स्तोऽष्टविधानात् । नापि गुणौ । द्रव्याश्रयी अगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणाभावात् । प्रत्ययात्मकत्वात्तयोर्गुणत्वमिति चेत् न । प्रत्ययात्मनोर्लक्षणयोः पृथिव्यादिष्वसंभवात् । तयोस्तदसाधारणधर्मत्वासंभवादेतेनाभिधानात्मनोर्द्रव्यलक्षणयोर्गुणत्वं प्रत्याख्यातं । नापि ते कर्मणी । परिस्पंदात्मकत्वासंभवादेकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणस्याभावाच्च । तयोरेकद्रव्यत्वे नवविधत्वप्रसंगाद्द्रव्यलक्षणस्य कुतो द्वित्वमेकत्वं वा व्यवतिष्ठते । यतो द्रव्यलक्षणत्वमेकं तत्र प्रवर्तमानमेकत्वं व्यवस्थापयेत्तथोपचरितोपचारप्रसंगश्च द्रव्यलक्षणत्वेनैकेन योगाद्द्रव्यलक्षणयोरेकत्वादेकं द्रव्यलक्षणं तेन चोपचरितेन द्रव्यलक्षणेनैकेन योगात्पृथिव्यादीन्येको द्रव्यपदार्थ इति कुतः पारमार्थिको द्रव्यपदार्थः कश्चिदेकः सिद्ध्येत् । यदप्यभ्यधायि वैशेषिकैः पृथिव्यादीनां नवानां द्रव्यत्वेनैकेनाभिसंबंधादेकत्वमिति द्रव्यं नामैकं पदार्थ इति तदपि न युक्तं । परमार्थतो द्रव्यपदार्थस्यैकस्यासिद्धेः तस्योपचारादेव प्रसिद्धेः । एतेन चतुर्विंशतिगुणानां गुणत्वेनैकेनाभिसंबंधादेको गुणपदार्थः, पंचानां च कर्मणां कर्मत्वेनैकेनाभिसंबंधादेकं कर्मपदार्थ इत्येतत्प्रत्याख्यातं । तथा वास्तवगुणकर्मपदार्थाव्यवस्थिते कथं चैव सामान्यपदार्थ एकः सिद्ध्येद्विशेषपदार्थो वा समवायपदार्थो वा । परापरसामान्ययोः सामान्यांतरेणैकेनाभिसंबंधायोगाद्विशेषाणां चेति समवाय एवैकः पदार्थः स्यात् । यदि पुनरिहेदमिति प्रत्ययाविशेषाद्विशेषप्रत्ययाभावादेकः समवायः तथा द्रव्यमिति प्रत्ययाविशेषादेको द्रव्यपदार्थः स्यात् गुण इति प्रत्ययाविशेषाद्गुणपदार्थः कर्मेति प्रत्ययाविशेषात्कर्मपदार्थः सामान्यमिति प्रत्ययाविशेषात्सामान्यपदार्थः विशेष इति प्रत्ययाविशेषाद्विशेषपदार्थ इत्यभिधीयते, तथापि वैशेषिकतंत्रव्याघातो दुःशक्यः परिहर्तुं स्याद्वादिमतस्यैव प्रसिद्धेः । स्याद्वादिना हि शुद्धसंग्रहनयात्सत्प्रत्ययाविशेषाद्विशेषलिंगाभावादेकं सन्मात्रं तत्त्वं शुद्धं द्रव्यमिति मतं । तथैवाशुद्धसंग्रहनयादेकं द्रव्यमेको गुणादिरिति, व्यवहारनयात्तु यत्सत्तद् द्रव्यं पर्यायो वेति भेदः । यद्द्रव्यं तज्जीवद्रव्यमजीवद्रव्यं च यश्च पर्यायः सोऽपि परिस्पंदात्मकोऽपरिस्पंदात्मकश्चेति सोऽपि सामान्यात्मको विशेषात्मकश्चेति । स च द्रव्यादविष्वग्भूतो विष्वग्भूतो वेति यथा प्रतीतिर्निश्चीयते सर्वथा बाधकाभावात् । वैशेषिकाणां तु तथाऽभ्युपगमो व्याहत एव तत्रविरोधात् । न हि तत्तंत्रे सन्मात्रमेव तत्त्वं सकलपदार्थानां तत्रैवांतर्भावादिति नयोऽस्ति । स्यान्मतं । द्रव्यपदेन सकलद्रव्य-

व्यक्तिभेदप्रभेदानां संग्रहादेको द्रव्यपदार्थः गुण इत्यादिपदेन चैकेन गुणादिभेदप्रभेदानां संग्रहाद्गुणादिरप्येकैकपदार्थो व्यवतिष्ठते "विस्तरेणोपदिष्टानामर्थानां तत्त्वसिद्धये । समासेनाभिधानं यत्संग्रहं तं विदुर्बुधाः " इति ॥ पदार्थधर्मसंग्रहः प्रवक्ष्यत इत्यत्र पदार्थसंग्रहस्य धर्मसंग्रहस्य चैव व्याख्यानादस्त्येव तथाऽभिप्रायो वैशेषिकाणामिति । तदप्यविचारितरम्यं । परमार्थतस्त्वेकैकस्य द्रव्यादिपदार्थस्य प्रतिष्ठानुपपत्तेः । तस्यैकपदविषयत्वेनैकत्वोपचारात् । न चोपचरितपदार्थसंख्याव्यवस्थाया पारमार्थिकी पदार्थसंख्या समवतिष्ठतेऽतिप्रसंगात् । न चैकपदवाच्यत्वेन तात्त्विकमेकत्वं सिद्ध्यति व्यभिचारात्सेनावनादिपदेन हस्त्यादिधवादिपदार्थस्यानेकस्य वाच्यस्य प्रतीतेः । ननु सेनापदवाच्य एक एवार्थः प्रत्यासत्तिविशेषः संयुक्तसंयोगाल्पीयस्त्वलक्षणो हस्त्यादीनां प्रतीयते, वनशब्देन च धवादीनां तादृशप्रत्यासत्तिविशेष इत्येकपदवाच्यत्वं न तात्त्विकीमेकतां व्यभिचरति । तथा चैकमुच्यते द्रव्यमित्येकः पदार्थः एकपदवाच्यत्वात् यद्यदेकपदवाच्यं तत्तदेकपदार्थो यथा सेना वनादिस्तथा च द्रव्यमेकपदवाच्यं तस्मादेकः पदार्थः । एतेन गुणादिरप्येकः पदार्थः प्रसिद्धोदाहरणसाधर्म्यात्साधितो वेदितव्य इति कश्चित् सोऽपि न विपश्चित् । सेनाशब्दादनेकत्र हस्त्याद्यर्थे प्रतीतिप्रवृत्तिप्राप्तिसिद्धेः । वनशब्दाच्च धवखदिरपलाशादावनेकत्रार्थे । यत्र हि शब्दात्प्रतीतिप्रवृत्तिप्राप्तयः समधिगम्यन्ते स शब्दस्यार्थः प्रसिद्धस्तथा वृद्धव्यवहारात् । न च सेनावनादिशब्दात्प्रत्यासत्तिविशेषे प्रतीतिप्रवृत्तिप्राप्तयोऽनुभूयन्ते येन स तस्यार्थः स्यात् । प्रत्यासत्तिविशिष्टा हस्त्यादयो धवादयो वा सेनावनादिशब्दानामर्थ इति चेत्सिद्धस्तर्ह्येकपदवाच्योऽनेकोऽर्थः । तेन च कथमेकपदवाच्यत्वं न व्यभिचरेत् । तथा गौरिति पदेनैकेन पश्वादेर्दशप्रकारस्यैकादशप्रकारस्य वा वाच्यस्य दर्शनाच्च व्यभिचारी हेतुः । कश्चिदाह न गौरित्येकमेव पदं पश्वादेरनेकस्यार्थस्य वाचकं तस्य प्रतिवाच्यभेदादन्य एव हि गौरिति शब्दः पशोर्वाचकोऽन्यश्च दिगादेः अर्थभेदाच्छब्दभेदव्यवस्थितेः । अन्यथा सकलपदार्थस्यैकपदवाच्यत्वप्रसंगादिति । तस्याप्यनिष्टानुषंगः स्यात् । द्रव्यमिति पदस्याप्यनेकत्वप्रसंगात् । पृथिव्याद्यनेकार्थवाचकत्वात् अन्यदेव हि पृथिव्यां द्रव्यमिति पदं प्रवर्तते । अन्यदेवाप्सु तेजसि वाय्वाकाशे काले दिश्यात्मनि मनसि चेत्येकपदवाच्यत्वं द्रव्यपदार्थस्यासिद्धं स्यात् । ननु द्रव्यत्वाभिसंबंध एको द्रव्यपदस्यार्थो नानेकः पृथिव्यादि तस्य पृथिव्यादिशब्दवाच्यत्वात् । तत एकमेव द्रव्यपदं नानेकमिति चेत् । किमिदानीं द्रव्यत्वाभिसंबंधो द्रव्यपदार्थः स्यात् ? न चासौ द्रव्यपदार्थस्तस्य द्रव्यत्वोपलक्षितसमवायपदार्थत्वात् । एतेन गुणत्वाभिसंबंधो गुणपदस्यार्थः कर्मत्वाभिसंबंधः कर्मपदस्येत्यतत्प्रतिव्यूढं गुणत्वाभिसंबंधस्य गुणत्वोपलक्षितसमवायपदार्थत्वात् कर्मत्वाभिसंबंधस्य च कर्मत्वोपलक्षितसमवायपदार्थस्य कथनात् । न चैवं सामान्यादिपदार्थः सिद्ध्यति । सामान्यादिषु सामान्यान्तराभिसंबंधस्यासंभवादित्युक्तप्रायं । एतेन पृथिवीत्वाद्यभिसंबंधात्पृथिव्यादिशब्दार्थस्य व्याख्यानं प्रत्याख्यातं । न हि पृथिवीत्वाभिसंबंधः पृथिवीशब्दवाच्यः । पृथिवीत्वोपलक्षितस्य समवायस्य पृथिवीत्वाभिसंबंधस्य पृथिवीशब्देनावचनात् । द्रव्यविशेषस्य पृथिवीशब्देनाभिधानाददोष इति चेत् । कः पुनरसौ वृक्षगुल्मादिपृथिवीभेदव्यतिरिक्तः पृथिवीद्रव्यविशेषः । पृथिवीति पदेन संगृह्यमाण इति चेत् । कथं पुनः पृथिवीपदेनैकेनानेकार्थः संगृह्यते ? द्रव्यादिपदेनैवेति दुरवबोधः । कश्चायं संग्रहो नाम ? शब्दात्मकः प्रत्ययात्मकोऽर्थात्मको वा । न तावच्छब्दात्मकः शब्देनानन्तानां द्रव्यादिभेदप्रभेदानां वा संग्रहीतुमशक्यत्वात् । तत्र संकेतस्य कर्तुमशक्यत्वादस्मदादेस्तदप्रत्यक्षत्वात् । क्रमेण युगपद्वा अननुमेयत्वाच्च । न चाप्रत्यक्षेऽननुमेये वा सर्वथाप्यप्रतिपन्नेऽर्थे संकेतः शक्यक्रियोऽस्ति । सर्वज्ञस्तत्र संकेतयितु समर्थोऽपि नाऽसर्वज्ञान् संकेतं ग्राहयितुमलमिति कुतः संकेतः । न चासंकेतितेऽर्थे शब्दः प्रवर्तते यतः

संगृह्यन्तेऽनन्ताः पदार्था येन शब्देन स शब्दात्मा संग्रहः सिद्ध्यत्येव । माभूच्छब्दात्मकः संग्रहः प्रत्ययात्मकस्त्वस्तु । संगृह्यन्ते अर्था येन प्रत्ययेन स संग्रह इति व्याख्यानात्तेन तेषां संग्रहीतुं शक्यत्वा-दिति चेत् । कुतः पुनरसौ प्रत्ययः प्रत्यक्षादनुमानादागमाद्वा ? न तावदस्मदादिप्रत्यक्षात् । तस्यानन्तद्रव्यादिभेदप्रभेदागोचरत्वात् । नापि योगिप्रत्यक्षात् । योगिन एव तत्संग्रहप्रसंगादस्मदादीनां तदयो-गात् । न हि योगिप्रत्यक्षमस्मदादयः संप्रतियन्ति योगित्वप्रसंगात् । नाप्यनुमानादनन्तद्रव्यादिभेद-प्रभेदप्रतिबद्धानामेकशोऽनन्तलिंगानामप्रतिपत्तेरस्मदाद्यप्रत्यक्षादनुमानान्तराच्चल्लिंगप्रतिपत्तावनवस्थानुष-ङ्गात् प्रकृतानुमानोदयायोगात् । यदि पुनरागमात्संग्रहात्मकः प्रत्ययः स्यात्तदा युक्त्यानुगृहीतात्तस्या-ऽननुगृहीताद्वा । न तावदाद्यः पक्षस्तत्र युक्तेरेवासंभवात् । नापि द्वितीयो युक्त्याऽननुगृहीतस्यागमस्य प्रामाण्यानिष्टेस्तदिष्टौ वाऽतिप्रसंगात् । न चाप्रमाणकः प्रत्ययः संग्रहस्तेन संगृहीतानामसंगृहीतकल्प-नात् । यदि पुनरर्थात्मकः संग्रहोऽभिधीयते सदा संगृह्यत इति संग्रहः संगृह्यमाणः सकलोऽर्थः स्यात् । स चासिद्ध एव तद्व्यवस्थापकप्रमाणाभावादिति कथं तस्य व्याख्यानं युज्यते यतः पदार्थधर्मसंग्रहः प्रवक्ष्यत इति प्रतिज्ञा साधीयसीष्यते । संग्रहाभावे च कस्य महोदयत्वं साध्यतेऽसिद्धस्य स्वयमन्यसा-धनत्वोपपत्तेः । एतेन पदार्थधर्मसंग्रहः सम्यग्ज्ञानमिति व्याख्यानं प्रतिव्यूढं । तदभावस्य समर्थनान्म-हतो निःश्रेयसस्याभ्युदयस्य चोदयोऽस्मादिति महोदय इत्येतद्व्याख्यानं वन्ध्यासुतसौभाग्यादिव्यावर्णन-मिव प्रेक्षावतामुपहासास्पदमाभासते । तदेवं द्रव्यादिपदार्थानां यथावस्थितार्थत्वाभावान्न तद्विषयं सम्यग्ज्ञानं नापि हेयोपादेयव्यवस्था । येनोपादेयेषूपादेयत्वेन हेयेषु च हेयत्वेन श्रद्धानं श्रद्धाविशेष-स्तत्पूर्वकं च वैराग्यं तदभ्यासभावनानुष्ठानं निःश्रेयसकारणं सिध्येत् । तदसिद्धौ च कथमर्हदुप-देशादिवेश्वरोपदेशादप्यनुष्ठानं प्रतिष्ठितं स्यात् । ततस्तद्व्यवच्छेदादेव महात्मा निश्चेतव्यः । कपि-लसुगतव्यवच्छेदादिवेति सूक्तमिदमन्ययोगव्यवच्छेदान्महात्मनि निश्चिते तदुपदेशसामर्थ्यादनुष्ठान-प्रतिष्ठितं स्यादिति । एतेन 'प्रणम्यहेतुमीश्वरं मुनिं कणादमन्वतः' इति परापरगुरुनमस्कारकरण-मपास्तमीश्वरकणादयोराप्तत्वव्यवच्छेदात् । तयोर्यथाव्यवस्थितार्थज्ञानाभावात्तदुपदेशाप्रामाण्यादित्यल-मितिविस्तरेण । विश्वतत्त्वानां ज्ञातुः कर्मभूभृतां भेत्तुरेव मोक्षमार्गप्रणयनोपपत्तेराप्तत्वनिश्चयात् ॥४॥

तत्रासिद्धं मुनींद्रस्य भेत्तृत्वं कर्मभूभृतां ।
ये वदंति विपर्यासात्तान्प्रत्येवं प्रचक्ष्महे ॥ ५ ॥

तत्र तेषु मोक्षमार्गप्रणेतृत्वकर्मभूभृद्भेत्तृत्वविश्वतत्त्वज्ञातृत्वेषु कर्मभूभृतां भेत्तृत्वमसिद्धं । मुनीं-द्रस्य विपर्यासात्तदभेत्तृत्वात् कर्मभूभृदसंभवात्सदाशिवस्य ये वदंति योगास्तान्प्रत्येव वक्ष्यमाणप्रका-रेण प्रचक्ष्महे प्रवदाम इत्यर्थः ॥५॥

प्रसिद्धः सर्वतत्त्वज्ञस्तेषां तावत्प्रमाणतः ।
सदाविध्वस्तनिःशेषबाधकात्स्वसुखादिवत् ॥ ६ ॥

यदि नाम विश्वतत्त्वज्ञः प्रमाणात्सर्वदा विध्वस्तबाधकादात्मसुखादिवत्प्रसिद्धो योगानां तथापि किमिष्टं भवतां सिद्धं भवेदित्याह—

ज्ञाता यो विश्वतत्त्वानां स भेत्ता कर्मभूभृतां ।
भवत्येवान्यथा तस्य विश्वतत्त्वज्ञता कुतः ॥ ७ ॥ इति ।

पत्तिरिति लक्षणस्य भावात् वाक्छल वा सभवदर्थपरित्यागेनासभवतोऽर्थस्य परिकल्पनात् न हि प्रमाणबलान्नैयायिकादिपरिकल्पित पत्रवाक्ये सभवन्नर्थ सिद्ध प्रत्यक्षादिबलादनेकातस्यैव प्रसिद्धे प्रत्यक्ष हि तावत् बहिरतश्च तत्त्व भावाभावात्मक व्यवस्यति सर्वथा विरोधाभावात् बाधकरहित जातुचित् एकांतस्यासाक्षात्करणात् तथाभूतानेकधर्माधिष्ठान भाव विशेषणविशेष्यादिव्यवहारान्यथानुपपत्तेरित्यनुमानाच्च सत्र भावाभावात्मक सिद्ध । आगमाच्च सुनिर्बाधकप्रमाणादिति प्रपचतोन्यत्र तत्त्वार्थालकारे देवागमे च प्रोक्तमिह पत्रपरीक्षाया सद्भिरवगतव्यमित्यल प्रपचेन तदप्युक्त ।

तथा त्रि सतत्त्वोऽपि पत्रवाक्यमुदीरित । वादिना गूढमन्यत्राविज्ञातार्थमुपागत ॥ १ ॥
परिस्फुरतिवादिभ्यामविज्ञातत्वसद्धित । ततश्चाप्रतिपत्ति स्यान्निग्रहस्थानमजसा ॥ २ ॥
परिप्रतिवादिभ्यामविज्ञातत्वसद्धित । ततश्चाप्रतिपत्ति स्यान्निग्रहस्थानमजसा ॥ ३ ॥
वक्तुर्विप्रतिपत्तिर्वा मिथ्यार्थप्रतिपादनात् । विसवादकतायोगात् तदुक्तार्थस्य तत्त्वत ॥४॥
स्याद्वादिभि पुन पत्रस्यानेकातसाधने । भवेद्विप्रतिपत्तिर्वाक्छल वा लक्षणान्वयात् ॥ ५ ॥
तद्धि सभवतोऽर्थस्य परित्यागेन कल्पन । यदसभवतोर्थस्य प्रमाणबलतश्छल ॥ ६ ॥
न चेह सभवन्नर्थो यागादिपरिकल्पित । प्रत्यक्षादिबलात्सिद्धस्ततोनेकातसिद्धित ॥ ७ ॥
भावाभावात्मक वस्तु बहिरतश्च तत्त्वत । प्रत्यक्ष निश्चिनोत्येव सर्वथा बाधवर्जित ॥ ८ ॥
वास्तवानेकधर्माधिष्ठान भावो विशेषत । विशेषणविशेष्यादिव्यवहारप्रसिद्धित ॥ ९ ॥
सिद्धमित्यनुमानाच्चानतधर्मसमाश्रित । समस्त वस्तु निर्बाधादागमाच्च प्रमाणत ॥ १० ॥

इति प्रपचत प्रोक्तमन्यत्रेहावगम्यतां । सर्वं पत्रपरीक्षाया सद्भिरित्युपरम्यते ॥

तदेव पत्रविचारप्रकरणपरिसमाप्तौ विजिगीषो स्याद्वादिनो वचन चतुरग निराकृताशेषमिथ्याप्रवादप्रसर श्रिया सम्यग्दर्शनादिलक्षणयोपायभूतयोपमेयानतज्ञानादिलक्षणलक्ष्मीपर्यततया सदा जयत्विति जयवादेनाशसयति—

जीयान्निरस्तनिःशेषसर्वथैकातशासन ।
सदा श्रीवर्द्धमानस्य विद्यानदस्य शासन ॥ १ ॥
सूक्ताभासो भवति भवतस्तावदुच्चारहेतु
स्वस्यान्येषा गुरुतमतमश्छिद्र मायस्यभाजां ।
तन्मन्येन निपुणमतिभिस्तत्र यत्नो विधेयो
नानदायाखिलखलधियां त हि क कर्तुमीश ॥ २ ॥

**इति श्रीस्याद्वादपतिविद्यानदस्वामिविरचिता पत्रपरीक्षा समाप्ता ।**

